# कीरसन्देशः



रिकपाट्युपनामकलक्ष्मीकान्तः

एम्० ए०

आन्ध्रोपन्यासकः

निजामकलाशाला

भाग्यनगरी.

# KIRASAMDESA



By
G LAKSHMIKANTAIAH, M.A.,
Lecturer in Telugu
NIZAM COLLEGE

*With the Compliments
of the
Vice-Chancellor.*

WITH A PREFACE
By

SRI KURUGANTY SITARAMAIYA, M.A.,
Retired Lecturer,
NIZAM COLLEGE
HYDERABAD-DECCAN.



 1952 [ PRICE 8 AS.

# PREFACE

I deem it a great privilege to have been asked to write a foreward to this short but beautiful poem. Sri Lakshmikanta-Sastri M. A., is a scion of a family of hereditary Pandits and Scholars; and he has kept up the tradition. He is a Vedic and Sanskrit scholar. In these days when Sanskrit studies are neglected, it is refreshing to find Mr. Sastri pursue them, and acquire proficiency in writing lucid poetry in Sanskrit. For this he deserves the thanks of all Sanskrit-lovers.

The theme of this poem is the lovely story of Rukmini-Kalyanam from Bhagavatapuranam. It has become very dear to the Telugu people, because the author of Telugu Bhagavata has written it in a manner more exquisite than the Sanskrit original. The present poem is a different version of the story. A parrot replaces the Brahman messenger, and changes into a divine damsel as soon as the message is delivered. Though this story is an adaptation, the author has endowed it with his originality The style is lucid, easy-flowing and beautiful. His knowledge of music is evinced in the choice of words and metres.

Wheh I read his first poem "Harastuti", I found in it great promise, and my expectations have been amply justified in this work. We find in both of his works

echoes of some of the grand pieces of poetry in Sanskrit. I hope the author will utilise his talents in the creation of a long and abiding work.

With these few prosaic remarks, I have great pleasure in introducing this "Khandakavya" to the Public.

HYDERABAD (DN.)
3rd March 1952.

(Sd.) KURUGANTY SITA RAMAIYA,
*Retired Lecturer, Nizam College.*

## —विज्ञप्तिः—

ग्रन्थोऽयं शिरोमणिबिरुदधारिणा सन्निधानोपाह्वेन श्रीसूर्यनारायणशास्त्रिणा आन्ध्रभाषाप्रणीतस्य कीरसन्देशस्यानुवादः परिष्कृतश्च तेनैव पण्डितेन। अतस्तस्याहमतीवाधमर्णतां गतः कृतज्ञश्च।

श्रीसूर्यनारायणशास्त्री गीर्वाणान्ध्रभाषापारगः प्रणेता च तत्समचन्द्रिकादीनां बहूनामुद्ग्रन्थानाम्। लोकज्ञता कथाग्रथनकौशल्यं भावसमृद्धिः शैलीसौकुमार्यं समुचितलोकोक्तिभाषीयपदघटनानैपुण्यं-इत्यादिगुणैर्विलसितमेतत्खण्डकाव्यं कवितिलकस्यैतस्यान्ध्रकाव्यसंसारे समुन्नतस्थानसंपादनायाकल्पतेत्युक्तिर्नात्युक्तिः।

श्रीशास्त्रिवर्येण रचितस्यास्य कीरसन्देशस्य वस्तुनो मातृका महाकविपोतनार्यरचितमान्ध्रमहाभागवतमित्यवगम्यते तत्रत्यभूमिकया।

"यत्स्यादनुचितं वस्तु नायकस्य रसस्य वा।
अवश्यं तत्परित्याज्यमन्यथा वा प्रकल्पयेत्"।

इत्यालङ्कारिकवचनानुरोधेन पात्ररसौचित्यसंपादनदृष्ट्या कविना आन्ध्रमहाभागवतकथांशा बहवोऽन्यथायिताः। तथाहि।

शाकुन्तले कविकुलगुरुणा कालिदासेन महाभारतवर्णितस्य दुष्यन्तस्याऽसत्यवादित्वरूपमनौचित्यं दूरीकर्तुं दुर्वाससश्शापस्तद्विमोचनं च कल्पितं। दुर्वाससश्शापं पुरस्कृत्यैव सानुमतीप्रवेशादयश्च कल्पिताः। तथैव मूलकथायां साक्षाद्भगवतः श्रीकृष्णस्य दुष्टचुरकर्मरूपमनौचित्यं परिहृतमस्मिन्काव्ये। श्रीकृष्णस्योत्कर्षसंपादनार्थमेव भागवतरुक्मिणो दुस्सन्धत्वमदान्धत्वादिरूपाः प्रकृतिदोषा अपनीताः प्रकल्पितंच तस्यानागस्त्वम्।

"असमर्थं विक्रान्तुं भीतं चैद्यान्मिथः प्रेम्णोः।
युवयोरहितकरं मां प्रभो! क्षमस्व........।"

इति श्रीकृष्णं प्रति रुक्मिवाक्यमेवात्र प्रमाणं। रुक्म्यनागस्त्वं संपादयितुमेव शिशुपालस्य धाष्टर्यबलात्कारौ प्रकल्पितौ। शिशुपालस्य धाष्टर्यबलात्कारौ पुरस्कृत्य मूलस्थितविप्रस्थाने सन्देशहरणार्थं कीरस्सृष्टः। शिशुपालेन धृष्टेनास्कन्ने कुण्डिनपुरे शुकेन विना न कोऽपि वार्ताप्रापणाय बहिर्गन्तुमलमिति तस्य प्रवेशो युक्तिक्षमः।

किंच आन्ध्रमहाभागवते श्रीकृष्णं प्रति सन्देशहरणाय रुक्मिणीप्रेषितो ब्राह्मणो निर्व्यूढदूतकृत्यः परावृत्य श्रीकृष्णस्यागमनं रुक्मिण्यै निवेदयति। तेन तस्या उत्कण्ठाप्रशमनेन रसभङ्गः स्फुरति। अतस्तदपनोदार्थं कृतकृत्यस्य कीरस्य रुक्मिणीं प्रत्यागमनं न वर्णितं। यदि शुको निवर्तेत यथापूर्वं

महानेव रसभङ्गः । अत एव शुकशापस्तन्मोक्षश्चाभिवर्णिता-वित्यहो ! कवेः कल्पनारमणीयता रसपोषणकौशल्यं सामंजस्य-दृष्टिश्चेत्यलं विस्तरेण—

ग्रन्थस्यास्यारचिता भूमिका सुगृहीतनामधेयेन चरित्रपरि-शोधकृतमुखेन कुरुगंट्युपनामकेन श्रीसीतारामभट्टाचार्येण । अत-स्तस्य पण्डितप्रवरस्य च अनुगृहीतस्वाभिप्रायस्य तत्रभवतः "डॉक्टर" आर्येंद्रशर्मणः "वाचस्पति" "साहित्यमहोपाध्याया"दि बिरुदांकितस्य एन्. ए. राघवाचार्यमहाशयस्य च मुद्रादोषसंस्करणे कृतहस्तस्य श्रीमतः ग. ब. माढेकर एम्. ए. महेच्छस्य च सविनयं साञ्जलिरहं कृतज्ञताबद्धः ।

अपि च पाठकमहाशया अत्रत्यगुणलेशग्रहणेन मामनुगृह्ण-न्त्विति सप्रश्रयमभ्यर्थये ।

इति
विबुधजनविधेयो
गरिकपाट्युपाह्वो
लक्ष्मीकान्तः

१-४-१९५२
भाग्यनगरी

I have had the good opportunity of reading both the poems, "Harastuti" and "Kirasandesa," of Shri G. Lakshmikantaiah, M.A., of the Nizam College and I really enjoyed them. The first was a Stotra, and the second is a Khanda-Kavya, in fact a "Duta-Kavya," whose tradition goes back to the "Meghaduta" of Kalidasa. That the "Kirasandesa" is a definite improvement on the "Harastuti," both as regards the theme and the execution, will be acceded by all.

I hope, it will find favour with all lovers of Sanskrit poetry.

(Sd) ARYENDRA SHARMA,
M.A., D. Phil.,
HEAD OF THE DEPARTMENT
OF SANSKRIT,
Osmania University.

25-3-1952
Hyderabad-Dn.

## जयहिन्द

अयं कोऽपि सुगमः प्रबन्धः

कीरसन्देशनामा भाग्यनगरनिजामकलाशालायामुपन्यासक पदमुपागतेन संस्कृतांध्रभाषयोः एम्-ए-पदभाजा गीर्वाणान्ध्र सारस्वतसेवनासक्तस्वान्तेन श्री. वे. लक्ष्मीकान्तशास्त्र्यभिजनेन रचितः ।

आदृतार्भकवेषो माधव इवाकृत्याऽल्पतमोऽप्येष ग्रन्थो ललितलवितैर्वचोविलासैर्विनैवायासं शेमुषीविसरस्य वैदर्भ्याः स्वप्रेयस्याशैशवाद्विराजमानां भक्ति प्रीतिञ्चावगमयन् भूयसैव दर्शनीयतामायाति ।

कविरयं लोकव्यवहारेष्वनारतं परिवर्तमानानेव संस्कृतशब्दान विकीर्य स्वाशयं सकलसहृदयहृदयेष्वावेशयति—सन्त्यत्र "कःपूत आसीच्छुक ! देशभागः ; जाते ! पतिं कं वृणुषेत्वं" इत्यादीन्युदाहरणानि ।

एवं सरलया सरण्या प्रवहत्यपि वाङ्मये "रम्यां वेदिमध्यतिष्ठत्कदाचिच्चूतच्छाये; कस्मै निमित्ताय समागतोऽसि; तुभ्यं हृद्यभ्यसूयति" इत्यादिशाब्दिकवेद्या मर्यादाः—"प्राङ्मुखीं

निम्नगां कर्तुमिव प्रत्यङ्मुखीं बलात्; पार्वणेन्दुं चकोरीव''— इत्याद्युपमामुख्याश्चार्थालङ्कारा: कवेरनिच्छतोऽपि सहजपाण्डित्य प्रभावेन प्रणिपतन्त्येव पदे पदे—

इयमेव च काव्यश्रीर्नाम ? यया तनीयानपि वाक्यखण्ड: पुन: पुनरपि विभाव्यमान: प्रत्यग्रइव रोमहर्षण: काव्यज्ञानां— तदीदृश्या: काव्यलक्ष्म्या: कारणीभूतोऽसौ कवितिलकस्तस्य वाणी च कृष्णस्येव कृतिनां मुदे सत्यं कल्पते—इतिनिवेद्यते—इति

यन् - ए - राघवाचार्य:

(जागीरदार)

१०—१—५१ —वाचस्पति:, —साहित्य-

गद्वाल महोपाध्याय:—

# कीरसन्देशः



श्रीवैकुण्ठस्सर्वलोकैकनाथो
दूरीकर्तुं भूमिभारं महान्तम् ।
आविर्भूतो द्वारकायामवात्सी-
द्रुक्ताह्वानेष्वस्म्यहं भो ब्रुवाणः ॥ १ ॥

आयान्त्यहर्दिवममुं सनकादयोऽपि
देवर्षयो दिगधिपास्त्रिदशेन्द्रमुख्याः ।
सिद्धाश्च चारणगणाश्च निषेवितुं च
गातुं निवेदयितुमर्चयितुं च भक्त्या ॥ २ ॥

मत्वा सस्वदिरे स्वान्ते
परब्रह्म यतीश्वराः ।
रसिकानां वरं चैनं
गोपिकाः प्रौढयौवनाः ॥ ३ ॥

जनस्स सर्वो मनुते स्म माधवम्
सुहृत्तमं बन्धुजनं गुरुं च ।
निदानभूतो जगतां कृपाब्धि-
र्यदुप्रवीरः स बभौ नगर्याम् ॥ ४ ॥

स्ववश्यभूतैर्निधिभिर्ग्रहांकैः
श्रिया च रत्नाकरराजपुत्र्या ।
क्रीत्वा जगन्त्येष चतुर्दशावन्
सम्मोदयामास किलाब्जनाभः ॥ ५ ॥

करावमर्शैरवलोकनैश्च
संभावयन् वृक्षलतानिकुञ्जान् ।
स्वदेहसंपर्कसुखेच्छयैष
स्थितान्निरुध्यात्मपथं नितान्तम् ॥ ६ ॥

प्रीत्या पुष्पोद्यानवीथीषु शौरिः
शृण्वन् श्राव्यान् शारिकाकीररावान् ।
रम्यां वेदिम्प्राप्य तिष्ठत्कदाचि-
च्चूतच्छाये चन्द्रकान्तोज्ज्वलन्तीम् ॥ ७ ॥

वामेतरं नेत्रभुजं मुरारेः
पुस्फोर चूतस्य फलं नभस्तः ।
पपात हस्तेऽवततार कोऽपि
विचित्ररूपः पुरतोऽस्य कीरः ॥ ८ ॥

अवतीर्णतरुं चलच्छदं
स्वपदं दक्षिणमुन्नमय्य तम् ।
जयशब्दमुदीर्य च स्थितं
हरिराकृष्य शुकं समीपतः ॥ ९ ॥

पक्षौ स्पृशन् पाणितलेन मन्दम्
तमाह भोश्शक्रधनुर्मनोज्ञ !
मदीयनेत्रोत्सवमातनोषि
गृहाण मत्स्वागतमर्पितं ते ॥ १० ॥

त्वया मनोहृत्य रसः फलाना–
मास्वादितो यन्मधुरं वचस्ते ।
न केवलं ते वदनं परन्तु
सुधातरङ्गायितमङ्गजातम् ॥ ११ ॥

कः पूत आसीच्छुक ! देशभाग–
स्त्वदीयवासेन मनोज्ञमूर्ते !
कया जनन्या परिवर्धितोऽत्र
कस्मै निमित्ताय समागतोऽसि ॥ १२ ॥

एवं पृष्टो विष्णुना कीर आह
स्वामिन् ! सर्वं वेत्स्युदन्तं त्रिलोक्याः ।
यन्मामित्थं पृच्छसीति प्रसादः
प्राक् सन्देशः श्रूयतां मे कथाऽतः ॥ १३ ॥

श्रुतचरी भवता खलु रुक्मिणी
प्रथितकुण्डिनराजकुलोद्भवा ।
तनुविभाजितपञ्चशरप्रिया
रचय तां तव कण्ठविभूषणाम् ॥ १४ ॥

बद्धानुरागा त्वयि जातमात्रा
विदर्भकन्या पुरुषोत्तमे सा ।
को हेतुरत्रेति विमूढचित्ताः
प्रभोऽवगन्तुं न हि पारयामः ॥ १५ ॥

सौवर्णडोलामधिशाय्य मात्रा
जेगीयमाना बहुशः कथास्ते ।
आकर्णयन्ती रुदितं विरम्य
ननन्द बाला स्मितसुन्दरास्या ॥ १६ ॥

गीते श्रुतेऽस्या रुदितं प्रशान्तं
समाप्तमात्रे पुनरुद्गतं च ।
को हेतुरत्रेति वयं न विद्मः
प्रीतिर्नु जन्मान्तरबन्धुता नु ॥ १७ ॥

शिशोर्विदर्भावनिपालपुत्र्या–
स्त्वदीयगाथाश्च कथाश्च गीतिः ।
भवन्ति दिव्यौषधयो हि बाला–
रिष्टप्रशान्तिप्रभविष्णवस्ताः ॥ १८ ॥

दिने दिने जानुकरेण बाला
पद्भ्यां स्खलद्भ्यां क्रमशश्चरन्ती ।
पूजागृहस्थाय नमस्करोति
परोपदिष्टेव बत ! स्वयं ते ॥ १९ ॥

मन्दं कराभ्यां प्रणमत्यसौ ते
गेयं पठन्ती पिकबालिकेव ।
नीराजनं च प्रददाति तुभ्यं
सौवर्णपात्रोज्ज्वलितं कुमारी ॥ २० ॥

अम्बेति तातेति च सा जनन्या
लीलोपदिष्टानि पदानि हित्वा ।
श्रोतॄन् ब्रुवाणा विदधाति बाला
सविस्मयान्माधव! माधवेति ॥ २१ ॥

जाते ! पतिं कं वृणुषे त्वमित्थं
पृष्टा वृणे शौरिमिति ब्रवीति ।
स्थिता भवद्विग्रहपार्श्वभागे
शुभाक्षतान् न्यस्यति तस्य मूर्ध्नि ॥ २२ ॥

अलक्तकालिप्तपदाब्जयुग्मा
सा कुंकुमालंकृतफालभागा ।
फलानि दत्वा प्रणिपत्य चाशी–
रुक्तीः कुमारी लभते सतीनाम् ॥ २३ ॥

आकर्ण्य शैशवक्रीडा–
स्ता लीलामानुषस्य ते ।
पार्वणेन्दुं चकोरीव
त्वां बाला शंसते हृदि ॥ २४ ॥

फलानि भोज्यानि सुमस्रजश्च
श्रीगन्धचर्चाश्च विदर्भकन्या ।
प्रागर्पयन्ती हृदयेश्वराय
तुभ्यं ततस्सा मुदिताऽवभुङ्क्ते ॥ २५ ॥

अश्रान्तमेवं निभृतं भवन्तं
प्रतिष्ठितं हृन्निलये वधूटी ।
एकान्तभक्त्या वरिवस्यति त्वां
प्रस्तौति गायत्यपि चालपन्ती ॥ २६ ॥

प्राग्जन्मनस्सौहृदवासनाना–
मुन्मीलनात्प्रीतिरुदेति जन्तोः ।
चित्तं कथं कुण्डिनराजपुत्र्या
लोलुभ्यते त्वां वयसीदृशेऽल्पे ॥ २७ ॥

ववृधिरेऽवयवैर्भवते स्पृहाः
सह तनूललितानि मनोरथैः ।
बत ! तनूललितैस्सह सद्गुणा
अतितरामप्रथते नृपकन्यका ॥ २८ ॥

वृन्तान्तरस्थः प्रसवो दलौघम्
यथा तथाऽङ्गं स्फुटयत्स्वबाल्यम् ।
शनैः शनैः प्राप्य वयो द्वितीयम्
महद्दृशोः पर्व विभाति कुर्वत् ॥ २९ ॥

स्तवाङ्गयष्ट्यां रचयत्यनङ्गे
तारुण्यलावण्यविलासरेखाः ।
रतिर्जिगीषारतिरङ्गवल्याम्
विदर्भजाया ललितानि धत्ते ॥ ३० ॥

श्रुत्वा गेहमुपागतैर्बुधवरैस्त्वद्रूपशोभां स्तुतां
पार्श्वे ते लिखितस्य चित्रफलके स्वामालिखन्ती रहः ।
मोहात्पश्यति कृष्ण ! चुम्बति मुहुर्गाढं समाश्लिष्यति
त्वामन्येक्षणशङ्कया च बहुशः संवीक्षमाणा दिशः ॥ ३१ ॥

सा गापयत्यात्मसखीरजस्रम्
त्वद्दिव्यगेयान्युपवीणयन्ती ।
आलापयन्ती च कलस्वरेण
वंशीलतां तिष्ठति केलिसौधे ॥ ३२ ॥

हसत्यसौ मां स्पृशतीति शौरि-
र्धावत्ययें ! मामनुधावतीति ।
वन्यां चरन्ती च हठात् स्थिता मां
चक्री रुणद्धीति सखीर्ब्रवीति ॥ ३३ ॥

त्वन्नामानि बहिस्सरन्ति वदनाद्याः का ह्ययंत्यास्सखी-
रालेख्यं भवतो लिखत्यहरहः किञ्चिल्लिखन्त्याः करः ।
पश्यन्त्याः किमपि प्रमुग्धमधुरं रूपं भवेद्गोचरं
शृण्वन्त्याश्च मनोहरः श्रुतिसुखं वेणुस्वर श्रूयते ॥ ३४ ॥

मूर्तिं तवालोक्य हरे! निजाग्रे
निधाय पुष्पस्रजमात्मकण्ठे ।
निरीक्ष्य तां भूपतितां क्षणेन
तिरस्कृतेवात्मनि खिद्यते सा ॥ ३५ ॥

तां वञ्चयित्वा कथमप्युपेन्द्र !
कान्ताः पराः कामयसे किल त्वम् ।
अभूत्किलैषा रुषिता ततस्त्वं
स्वप्ने तदंघ्र्योः पतितः किलासि ॥ ३६ ॥

चुम्बतीव भवन्तं सा
स्नेहान्मां चुम्बति प्रभो !
श्लिष्यतीव भवद्गात्रं
शून्यं श्लिष्यति सुन्दरी ॥ ३७ ॥

स्वयंवरायागतराजकस्य
संपश्यतोऽग्रे जलजायताक्षम् ।
वृणोमि कण्ठे वरणीयमालाम्
बध्नामिचेत्यात्मनि भाषते सा ॥ ३८ ॥

नाहं शक्नोमि कथितुम्
तस्याः प्रेम्णः कलामपि ।
सर्वज्ञस्त्वं न किं वेत्सि
सत्यासत्ये मदुक्तिषु ॥ ३९ ॥

सौन्दर्यराशिस्सुषमानिधानम्
साम्राज्यलक्ष्मीर्मकरध्वजस्य ।
लोकैकलावण्यवतीति वादो
नात्युक्तिरासीत्सहजोक्तिरेव ॥ ४० ॥

यत्राकृतिस्तत्रगुणा भवन्ती–
त्येवं बुधा न्यायमुदाहरन्ति ।
तल्लक्ष्यभूता भुवनत्रयेऽपि
विदर्भकन्यामपहाय काऽन्या ? ॥४१॥

गात्रं तदीयं खलु रत्नराशिः
स लोभनीयस्सुतरां परेषाम् ।
निर्णेतुमस्यार्घमिहास्ति शक्तः
क्रेतुञ्च तं त्वामपहाय कोऽन्यः ॥ ४२ ॥

तल्लावण्यं त्वयीदृक्च
गाढं प्रेम जगद्गतम् ।
शिशुपालस्समाकर्ण्य
तुभ्यं ह्यभ्यसूयति ॥४३॥

कन्यां तां याचितुं स्वस्मै
चैद्येन प्रहिते जने ।
अवधीर्य पिता भीष्मः
प्रेषयामास तं गृहम् ॥ ४४ ॥

प्राङ्मुखीं निम्नगां कर्तु-
मिव प्रत्यङ्मुखीं बलात् ।
त्वच्चित्तां रुक्मिणीं कर्तुं
स्वानुरक्तामियेष सः ॥ ४५ ॥

कन्यायां गाढमोहोऽस्य
जाताऽसूया च ते विभो !
आविष्टश्चैव एताभ्यां
पिशाचाभ्यामचिन्तयत् ॥ ४६ ॥

मायी हरिर्हरेद्बाला-
मद्य श्वो वाऽविलम्बनात् ।
क्षणो हरामि तां पुष्पम्
मधुपस्य यथा जनः ॥ ४७ ॥

चतुरङ्गबलोपेत
आस्कन्द्याद्यैव कुण्डिनम् ।
प्रक्षोभ्य भीष्मकादीनां
धूमकेतुर्भवाम्यहम् ॥ ४८ ॥

शृङ्गभङ्गं हरेः कुर्याम्
मार्जयिष्यामि तद्यशः ।
तूलयिष्यामि तद्दर्प-
शैलं चेत्यकरोन्मनः ॥ ४९ ॥

तारतम्यं न यो वेत्ति
प्रतापस्य परात्मनोः ।
दृप्तः पतङ्गवद्वह्नि–
प्रविष्टस्स्यान्न भस्मसात् ॥५०॥

महाबलेन चैद्याग्नि–
र्मगधेन समीरितः ।
दग्धुं भटासिकीलाभि–
र्वृणोत्कुण्डिनं पुरम् ॥५१॥

न चलति तृणमपि नगरे
शान्तो रथ्याप्रचारश्च ।
प्राणान्कथमपि धृत्वा
भीष्मः पौराश्च वेपन्ते ॥५२॥

अग्निदग्धं गृहमिव
द्वीपवन्मग्नमम्भसि ।
इतिकर्तव्यतामूढो
रुक्म्यैच्छत्सोदरीबलिम् ॥५३॥

रत्नमङ्गारखण्डेन
हंसीं काकेन योजितुम् ।
हन्तेच्छतो हतविधेः
प्रभुत्वाय नमोनमः ॥५४॥

आकर्ण्य तां घोरवार्ताम्
वज्राघातादिवापतत् ।
मूर्छितांगं नाद्ययाव-
त्संस्करोति रुदत्यसौ ॥५५॥

गत्वा वनं पुष्पलताकुडुङ्गे
सा चन्द्रकान्तोपलवेदिकायाम् ।
सङ्कोचयन्ती ललिताङ्गकानि
शेते यथा म्लानसुमं धरायाम् ॥५६॥

श्वसित्युष्णञ्च दीर्घञ्च
मुञ्चत्यश्रूणि सन्ततम् ।
सैवोत्स्वप्नायते रोदि-
त्युत्ताम्यति हसत्यपि ॥५७॥

स्थापयामः कथं धैर्यम्
कथमाश्वासयेम ताम् ?
मेधाविनी च विदुषी
सोपचारं न वेत्ति किम् ? ॥५८॥

द्वाराणि चत्वारि निरुध्य चैद्ये
निषिध्य च प्राणिततेर्बहिर्गमम् ।
सहस्रनेत्रैरभिवीक्षमाणे
नेशा सखी मे प्रहितुं वचस्ते ॥५९॥

तया सहाश्रूणि बत ! त्यजन्तं
विलोक्य मामाह सखी विषण्णा ।
सखे ! न कोऽप्यस्ति जनो विना त्वां
मद्वाचमावेदयितुं प्रियाय ॥६०॥

न निग्रहीतुं न च शङ्कितुं वा
नालं चमूस्त्वां द्विषतां विहङ्गम् ।
आयाहि गत्वा पुरतस्थ एव
भवत्पदे जन्मशतेन सेवे ॥६१॥

इति स्पृशन्ती चिबुकं च पादा-
वयाचतैषा बहुधा चिरं माम् ।
अवाप्तमानृण्यमखण्डपुण्या-
ल्लब्धं च ते दर्शनमद्य देव ! ६२॥

अद्य श्वो वा बलाद्धृत्वा
बालां चैद्यो गमिष्यति ।
आकर्णय सरोजाक्ष्या
सन्दिष्टं वचनं प्रभो ! ६३॥

भवान्भूतेषु सर्वेषु
सूत्रप्रायोऽवभासते ।
इयत्तां किं न जानीषे
हृद्व्यथाया ममेश्वर ! ॥६४॥

भवतः पाददासीं माम्
तदनुग्रहकांक्षया ।
अमंस्त दातुं चैद्याय
भ्राता हन्त ! गतिर्भवान् ॥६५॥

जातास्म्यवन्यां भवदर्थमेव
त्वदर्पणायाभिलषामि मां भोः !
भक्त्या च रक्त्या च कृपार्द्रदृष्ट्या
स्वामिन् ! गृहीत्वा सफलां कुरु त्वम् ॥६६॥

नवकण्ठोचितं वैज–
यन्तीदाम शुनो गले ।
दुर्दैवं निदधात्यद्य
रूक्षमुग्रं च निर्घृणम् ॥६७॥

त्रिकरणशुध्द्या कति वा ?
व्रतानि कति वा तपांसि पुण्यानि ।
चरितानि मया प्राप्तुं
नाथं त्वां वेत्ति देव ! मम हृदयम् ॥६८॥

मम जीवितेक्षुखण्डम्
धिक्कष्टं नीरसं जातम् ।
मम भाग्यलता शुष्का
जातं कृमिणं फलं च मोहस्य ॥६९॥

कायेन वाचा मनसाऽपि नित्यं
निषेव्यमाणोऽसि मया मुरारे !
त्वामेव नूनं शरणं प्रपद्ये
सुधां नु मह्यं गरलं नु दद्याः ॥७०॥

संवाहयाम्यंघ्रिसरोरुहे ते
त्वद्गीतरागे लयमादधामि ।
हस्तावलम्बञ्च ददामि तुभ्यम्
दास्याय तेऽहं स्पृहयामि देव ! ॥७१॥

यदेव कथितं यच्च–
द्भाषितञ्च कृतञ्च यत् ।
मया त्वल्लग्नचित्तेन
वाच्यं किं सर्वगस्य ते ? ॥७२॥

बालेन भवता शैलः
कराग्रे धारितः खलु ।
उत्पाताद्रिः पतेन्मूर्ध्नि
धृत्वा रक्ष भवान्गतिः ॥७३॥

यत्सूत्रप्रायोक्तं
वैदर्भ्या मुग्धभावेन ।
सर्वं मयोक्तमेत–
द्भाष्यप्रायमिति मन्यस्व ॥७४॥

न यावदुद्बन्धनवारिवह्निभि–
र्विषेण वाऽसून् युवती विमुञ्चति ।
द्रुतेन तावद्व्रज रक्ष च प्रभो !
वृथैव सेतोस्सृजनं गताम्भसः ॥७५॥

मुहूर्तमात्रमप्यत्र
नार्हसि त्वं विलम्बितुम् ।
इतिन्यायो निवेद्यः कि–
मालस्यादमृतं विषम् ॥७६॥

आमूलाग्रं कथितम्
दयनीयं मे सखीवृत्तम् ।
कर्तव्यं बोधयितुं
भवादृशानामलं पतत्री किम् ? ॥७७॥

इतीरयन्नेव शुकः स्वरूपं
त्यक्त्वा यथाविद्युदयं विलस्य ।
सुराङ्गनारूपमवापदेषा
विस्माययन्ती तमुवाच शौरिम् ॥७८॥

श्रियः पुरा वयस्याऽहम्
नाम्ना विद्युल्लता मम ।
दृक्कोणाभ्यां वचोभ्यश्च
शुकनाम कृतं तया ॥७९॥

चित्रवर्णाम्बरं देव्या
दुश्चापल्यादचूचुरम् ।
चित्रवर्णाङ्कैः कीर–
स्त्वं भवेत्यशपद्रमा ॥८०॥

"प्रणिपातसमा दोषा
दासानां" क्षम्यतामियम् ।
इत्यर्थिताऽऽह शापान्तम्
वैदर्भीदौत्यमेव मे ॥८१॥

मां शुकं चित्रवर्णाङ्गम
चरन्तं केलिकावने ।
नेत्रोत्सवकरं भीष्मो
हृत्वा स्नेहेन रक्षति ॥८२॥

अस्य मुहूर्तस्य कृते
राज्ञः पुत्रीं समाश्रित्य ।
निर्व्यूढदूतकृत्या
भवत्प्रसादाद्विमुक्तशापाऽहम् ॥८३॥

अभोजयन्मां मधुराणि पाणिगं
फलानि नानारसवन्ति सुन्दरी ।
परामृशन्ती निजगण्डभागयो–
रचुम्बदङ्गं बहुशो दिने दिने ॥८४॥

अमन्यत बहि:प्राण–
मपुवज्जननीव माम् ।
निधानं चाभवत्सा मे
श्रियस्सेवा वृथा किमु ? ॥८५॥

आपृच्छ्येत्वामहं गच्छा–
म्याशु त्रायस्व मे सखीम् ।
आर्तत्राता भवांस्तस्यै
निवेदय कथासु माम् ॥८६॥

सा निवेद्यात्मनश्शाप–
कथां नत्वा पुनः पुनः ।
सुरनागीमणेर्लक्ष्म्या–
स्सेवार्थमगमद्दिवम् ॥८७॥

दृशोः पुरस्तान्मम दृश्यते सा
दीनानना मां बत ! चिन्तयन्ती ।
संवाद्यमुष्यास्सकलं चरित्रम्
श्रुतं पुरा यन्मुनिनारदेन ॥८८॥

शुकेन कथितस्स्नेह–
स्तस्या मयि सविस्तरम् ।
एक एवावयोर्व्याधि–
रेकमेवौषधं वरम् ॥८९॥

हरिर्विचिंत्येति शुभस्य शीघ्र-
मिति स्मरन् स्वर्णरथं जवाश्वम् ।
आरुह्य सन्नद्धमहास्त्रचापः
प्रियां समानेतुमियाद्विदर्भान् ॥६०॥

अनिच्छन्तीं बलाच्चैद्यं
पाणौकर्तुं सहोदरीम् ।
सन्नद्धे मण्डपे रुक्मि-
ण्यायातोऽतर्कितं हरिः ॥९१॥

सिद्धप्रायं परिणयम्
विहन्तुमयमागतः ।
इतिक्रुद्धाश्चैद्यमुख्या
अभ्यग्नि शलभा इव ॥६२॥

आपतंस्तमभिद्रोग्धुम्
चतुरङ्गबलैस्सह ।
ये यादवशरज्वाला-
जाले भस्मीकृतास्ततः ॥९३॥

यूकालिक्षं मत्कुणान्वा
मृद्नन्वीरान्करांघ्रिणा ।
ऐकैकस्यैकैकरूपम्
धृत्वाऽजंभत केशवः ॥९१॥

पिशाचान् जम्बुकान् गृध्रान्
काकांश्चातर्पयद्धरिः ।
हतवीरास्थिमज्जाभी
रक्तैर्मांसैश्च सङ्गरे ॥९५॥

चक्रावृत्तीर्गृध्रा
विविचक्रुर्भुवि कबन्धाश्च ।
चलयंश्चामरमकरो-
न्नृत्यं कलहाशनोऽपि संतृप्तः ॥९६॥

किं निगोद्धुमलं छत्र-
मशनिं किं सुदर्शनम् ।
निरुन्धे चैद्यखड्गस्स
प्राणत्कथमपि द्रुतः ॥९७॥

नरो न म्रियतेऽकाले
विद्धश्शरशतैरपि ।
प्राप्तकालः कुशाग्रस्य
क्षतेरेवेति च श्रुतिः ॥९८॥

हस्तभ्रष्टफलं मत्वा
कन्यां भग्नमनोरथः ।
गतश्चैद्यः प्रसन्नाभू
दुल्लाघेव विदर्भजा ॥९९॥

सुप्तोत्थितेन चैद्येन
दृष्टं दुःशकुनं किमु ?
प्रातरेवाहरच्छौरि
रुक्मिणीं च जयश्रियम् ॥१००॥

प्रहर्तुं लत्तयोद्युक्तो
भग्नपादोऽपतद्यथा ।
हरिं न्यक्कर्तुकामोऽयम्
चैद्यो हास्यास्पदं कृतः ॥१०१॥

मया विसृष्टस्तं गत्वा
प्रत्यागच्छ जवादिति ।
नैवागतश्शुकः किन्नु
निगृहीतो भवेत्परैः ॥१०२॥

इति चित्ते चिन्तयन्ती
सम्प्राप्तेऽपि प्रिये हरौ ।
उत्कण्ठिताऽभूत्कीराय
सख्युः स्नेहो महत्तरः ॥१०३॥

कन्याबलिं हर्तुकामं
पीडमानं पिशाचकम् ।
निष्कासिने केशवाय
स्वागतं भीष्मको ददौ ॥१०४॥

असमर्थं विक्रान्तुम्
भीतं चैद्यान्मिथः प्रेम्णोः ।
युवयोरहितकरं माम्
प्रभो ! क्षमस्वेत्यनंस्त रुक्मी सः ॥१०५॥

सिद्धप्रायोद्वाहनाशेन जातम्
पापं दूरीकर्तुमिच्छुर्मुरारिः ।
पाणिं भैष्म्या अग्रहीन्मण्डपेऽत्र
हृष्टैर्वृष्टे पुष्पवर्षे सुरौघैः ॥१०६॥

बाल्यात्प्रभृति संस्निह्य
दूनचित्तां विदर्भजाम् ।
साक्षात्कृत्य समुद्धृत्य
स्वात्मानं हरिरार्पिपत् ॥१०७॥

पश्चादूढानां श्री–
हरिणा षोडशसहस्रसंख्यानाम् ।
युवतीनां महिषीपद–
मारूढा पुण्यं कियत्तस्याः ॥१०८॥

श्रेयांसि बहुविघ्नानि
वायुना घनबृन्दवत् ।
दैवेन सर्वविघ्नानि
क्षिप्तानि स्युर्भवेच्छुभम् ॥१०९॥

शुकशापनिवृत्तिं च
सुरलोकस्य निर्गमम् ।
हरिरुक्त्वा व्यथां हृत्वा
तया रेमे यथासुखम् ॥११०॥

शुकशारीयुग्मकवत्
कुर्वन्नक्ष्णोर्महोत्सवम् ।
श्लिष्टान्योन्यकटं द्वन्द्वम्
तच्चिक्रीड चरद्वने ॥१११॥

